आवयोः पुरो वर्त्मनोर्द्वयोरेकतरो दीर्घश्वेतरक्तः सुवर्णनगरीमध्यगच्छदन्यश्च विपिनगुल्मावृतः प्रति कन्दरम्। मदीयमार्गदर्शकोऽत्र क्षणं प्रतीक्ष्याग्रवर्तिनं विस्तीर्णप्रदेशं निरूपयन् गिरिगह्वरगामिनमध्वानमगृह्णात्। दुग्धधारयेव धवलितो ज्योत्स्नया पन्था दिवाकरप्रचण्डतापतप्तः शनैः शनैः शैत्यमभजत्। प्रदेशस्यास्य प्रशान्तता न चिरात्प्रवयसो मुखाच्छ्रोष्यमाणेतिहासवैलक्षण्यं प्रागेवासूचयत्स्फुटम्। यथा यथा विशालशालिसङ्कुलं दुस्तरारण्यमगाहिष्वहि तथा तथा स्वप्नदृष्टस्थलस्य प्रत्यक्षदर्शनेनेव विस्मयादिभावनाभिः काभिरभिभूतोऽहम्। अथानतिदूरं गत्वा कन्दरस्योपगूढं शिखरं गन्धसारसुरभितं समासादितमावाभ्याम्। पुण्यगर्भागारे प्रवेशात्प्राक् पादुके अपनय चेतसश्च सर्वप्राकृतविचारान् निष्कासयेति दक्षिणकरतर्जन्यङ्गुष्ठाभ्यां कूर्चं परामृशन् गम्भीरस्वरेण मामादिशत् तापसः। मयाप्यनुष्ठिता झटिति तदाज्ञा। अथ यावद् गुहायास्तमोमयीं शैवालाच्छादितां दृषत्सोपानपङ्क्तिमवारोहाव तावत्तस्याः समाधिसदृश्या निःशब्दतया निष्प्रभत्वेन गाम्भीर्येण च महाविस्मयाकुलोऽभवम्। अहो परःशतवर्षीयकालात्ययेनानवगाह्यं शाश्वतं च स्यात् पुनर्गर्भागारमेतदित्यतर्कि मया साश्चर्यम्। मदीयमार्गदर्शकस्य पदमनुचरन्महापरिणाहमणिशिलामयीं पुरुषस्य मूर्तिं शुभाशिषो वितरन्तीमिव सामिप्रकाशितमध्यभागे गुहाया अद्राक्षमहम्। प्रतिमाया अस्या विशालद्रुमकाण्डसदृक्षं बाहुयुगलप्रकाण्डं तत्पादयोर्निपतितां विपद्गतां शरणार्थिनीं कामपि वनितां परित्रातुमिवोन्नमितमासीत्। प्रतिकृतिमिमामालोक्य जीवनचक्रविमुक्तान्निर्वाणेप्सूननुयायिनः स्वश्रेष्ठसत्यचतुष्टयमुपदिशतः प्रथितयशसो भगवतो बुद्धस्याजण्टाख्यायां गुहायां स्थिता नैपुण्यातिशयेन घटिता प्रतिमा मत्स्मरणसरणीमारुक्षत्। अशंसन्मे कमपि बालभावमानन्दोल्लासिनी नयने मूर्तेस्तस्या उन्नतमंसयुगलं, सुदीर्घबाहू, दाक्षिण्यगाम्भीर्यबुद्धिमत्ताद्योतकं विशालं ललाटम्, शान्ततया स्नातं च शरीरम्। भ्रूमध्यस्थापिताचलदृष्टिः समाधिस्थितेव परमब्रह्मविचारवशा ददृशे प्रतिमा। तपःसन्न्यास-स्वार्थत्यागाद्युदात्तभावा भासन्ते स्म स्फुटं प्रतिमामुखे। अथ मूर्तेः पादयोः पुरो निपत्य कृताञ्जलिः साष्टाङ्गप्रणिपातं कुरु परस्तादेतदीयां पावनकथां ते निवेदयिष्य इत्यनोचत स्थविरोऽध्वगः। प्रतिध्वनद्गुहाविमानाभोगे तस्य स्वरो दीर्घतामुपेतः प्रत्यभाद् वेतालध्वनिरिव भीषणः। तदादेशं निःशब्दमनुसरते पुनश्च समुत्थिताय मे तमोमयं कोणमेकं प्रत्यासमानमनुयातुं संज्ञां प्रददौ स यथा प्रभवेयं स्फुटतरं प्रतिमां तां पूज्यतमामालोकयितुम्। कन्दरान्तश्चिरसंचितधूम्रच्छायापटले स्थविराध्यापिकास्य प्रत्यभादमानुष इव शरीराकारः। तदीयं पाण्डुराननं गम्भीरं च नयनयुगलं मामवर्णनीयमोदावस्थाकुलं विनेनाते। निरन्तरध्यानमग्न आयुःसूत्रलग्नगात्रसंलग्न इवादृश्यन्त प्रवयाः, अकथयत्स्थाध्यापिकां च तामद्भुतां यथा—

वतस्थे । नगरीयं विध्वस्तप्राया यावत्तिष्ठति तावदस्मादेव गिरेस्त्वारक्षकोऽपि दिव्यपुरुषः विदितनगरविपज्जालो दीनदुःखदावदहनोद्विग्नस्तत्परिहारविचक्षणः प्रचण्डग्रीष्मतापे दिवा तमिस्रायां च कृतैर्जपतपोध्यानादिभिर्भगवद्भक्तिनिष्ठो दीर्घदीर्घं कालमयापयद् दुःखित-प्रजायाश्च संरक्षणाय परमात्मानमभ्यर्थयामास । ततः कतिपयमासाभ्यन्तरे वृष्टिमहौघेनादृष्टपूर्वेण प्लाविता नगरी प्रवाहैर्जनानां विस्मयातिशयोद्गारैश्च पर्यपूर्यत ।"

अत्र प्रवयाः क्षणमात्रं वृत्तान्तस्य पौर्वापर्यस्मरणपराधीन इव किञ्चिद् व्यरमत । ततश्च जोषं प्रतिमायाः पादयोरन्तिकनिहिताङ्गारपात्रे धूपगन्धसारखण्डानि जपन् किमपि सुगपत्प्रक्षिप्य मन्दतरस्वरेण निवेदयितुं पुनरुपाक्रमत—

"धराधिपः करणसिंहो गर्वोच्छूनाधरः श्रेष्ठपुरुषस्यास्याद्भुतकृतिमपूर्वामाकर्ण्य तमेतं स्वप्रासादमलङ्कर्तुं न्यमन्त्रयत । परं शुद्धात्मना तदनुग्रहे नोररीकृते भूपेन्द्रोऽभिमानी तमभिनन्दयितुं स्वयं तदन्तिकमुपेतवान् । अथ व्यतीतेषु बहुषु वत्सरेषु गृहीतमानवाकृति-र्दिव्यपुरुषोऽयं स्वधर्मरक्षणसक्षणःसत्यतासमर्थनाय कदाचित्तिरोभविष्यति ध्रुवमिति जनतायां वार्ता प्रथितासीत् । प्रचण्डातपवर्षासु स्वरुचिरदेहयष्टिमिन्द्रियसंयमेन क्लेशयमानस्या-नवरतप्रजागरेण ध्यानयोगाच्छ्रेष्ठपदमीप्सोस्तस्य दर्शनामृतेन स्वान्तरङ्गं सन्तोषयितुं तदन्तिकं बालस्त्रीपुरुषवृन्दं परःशतशः प्रतिदिनं समाययौ । यात्रिका नानाविधोपहारानानीय तदीयपादयोः समीपं निदधुः । आमध्याह्नादामध्याह्नं ध्यायतस्तस्य वृक्षशाकुन्तकास्त-दङ्कोपरि समुत्प्लुत्य खर्जुरिका आस्वादयन्, नीलवर्णकपोताश्च शालीतण्डुलकणानुपा-भुञ्जत । योगिराडयं शताधिकवर्षदेशीयोऽपि नवयौवनभूषित इव बभौ । अहो प्रभावोऽयं खलु तस्यामरभावस्य । तस्याननस्य देदीप्यमानच्छविं रुचिरताजितमारां शरीराकृतिं तद्दिव्यप्रभावशंसि विशाललाटं दर्शं दर्शं वृद्धा युवतयश्च क्षणमनिमेषा विस्मृतात्मदेहा-स्तस्थुस्ततश्चात्यन्तं तं चकमिरे । तास्वासीत्करणसिंहराजस्य दुहिता भारतीनाम्नी कुन्द-कुड्मलसुकुमाराङ्गयष्टिः कमललोचना बालार्कपल्लवकान्तिः पीयूषमधुरवचना विनयशीला च ।" निशम्यैतत्सविस्मयमपृच्छं 'किं नृपात्मजापि काषायाम्बरधारिणि तापसे बद्धानुरागा संवृत्ते' ति । वृद्धो मामाश्वासयितुमुदतरत, "तथैव खलु । परं स्वप्रेम्णः सिद्धिरसाध्येति विजानन्त्यपि यौवनोपयुक्तभोगानखिलानुत्सृज्य तं पुण्यात्मानं स्वहृदयेश्वरं दृढमाकलयन्ती तस्यैव ध्यानमनवरतमकरोत् सा । निराहारा निरानन्दा च राजकन्येयं क्रमेण हास्यवर्जिता बभूव । तदीयां शरीरयष्टिं प्रतिदिनमधिकमधिककृशां दर्शं दर्शं सन्त्रस्तौ तत्पितरौ तामपृष्ट्वैव सह केनचिद्राजकुमारेण तस्या विवाहयाज्ञनिश्चयं कृतवन्तौ । विदित्वैतद् भारती नैराश्य-भुजङ्गेन दष्टेव भयविह्वला मृतप्रायाऽवतस्थे । अथो गत्यन्तराभावादुद्वाहस्य पूर्वस्मिन् दिने तपस्विनीयमबला सूर्यास्तमनात्प्रागलक्षिता दौवारिकैर्विचारभारविरुद्धगतिरपि हृदयेश्वर-मुपनिश्रासुः शङ्कातङ्कमपास्य पितुः प्रासादात्पलायनमकरोत् । हेमन्तक्षणिकसन्ध्या-सामयिकनीललोहितच्छायाव्याप्ते प्रदोषे सुरभिसुमनःस्रजमादाय हस्ते शनैः शनै-र्गिरिकन्दराभिमुखमेव कथमप्येकला प्रातिष्ठत । अत्र पर्वतश्रेणीतः पर्वतश्रेणीमटव्या अटवीमधित्यकातोऽधित्यकामन्तरा नासीत्कोऽपि पन्थाः सरलः । ततश्च श्वासनिरोधादति-

ध्वनेर्बधिरीकृतक्रोशार्धान्तरालवर्तिप्राणिवर्गस्य प्रशान्तप्रदोषेऽस्मिन् । क्रमेण ध्वनिरुच्चादुच्चतरः समजनि । मेषपालकस्यात्मजः शीघ्रमुत्थाय कन्दरायाः सोपानपङ्क्तिं जवेनारोहत् । कम्पमानहृदया तपस्विनी भारती तरलदृष्टिर्व्याधभयाभिभूतेव कुरङ्गी दुःखपारावारे मज्जतीवानन्यगतिका केशकलापमाकर्षन्ती निराशान्धकारे नष्टेव समाक्रोशन्मुक्तकण्ठम् । 'हा हा हतास्मी' ति । विजनस्थलेऽस्मिन्नागमनेनातिक्रान्ताविनयं क्षुण्णस्वाभिमानमात्मानं मेने । ततश्च विवर्णवदना स्वेदबिंदुस्नातललाटा च राजपुत्री बाष्पौघनिग्रहे प्रयतमाना करौ सम्पुटीकृत्य भूतलमाविलं चकार नयनजलधारया । तुरङ्गखुरध्वनिः प्रतिक्षणमेधमानो गिरिकन्दरस्याधिकाधिकं नेदीयान् दम्भोलिवह्नीपगतां भेजे । "भगवन्, त्रायस्व मां त्रायस्वे'ति भारती महात्मनः पादारविन्दयोर्निपत्य विततबाहुपल्लवा क्वणदन्ततितिम्लानपुष्पशिथिलितसुकुमाराङ्गयष्टिः सकरुणमभ्यार्थयत । तत्क्षणं माणवकः कन्दरसोपानमूर्ध्नो 'भूपतिर्भूपतिरि' त्युच्चैराक्रोशन् सन्त्रासविवर्णास्यः सवेगमवरुह्य प्राविशद् गुहाम् । अभिरक्षणाय च गुप्तस्थानमन्विष्यन् 'एहि तत्राभ्यन्तरकोणेऽन्तर्हितौ भविष्याव' इति कम्पमानां राजकन्यामसूचयत् । विधूते शिरसि तया वेपमानयाऽऽपादमस्तकं बहुलान्धकारे परामृशंस्तमोवृतकोणे निरुद्धश्वासो विलीनो यावत्तिष्ठति तावद्भारती करपल्लवौ प्रसभं समपीडयच्चैराद्येन । 'हा हा ध्रुवमेव मे विनाशोऽद्य । ध्रुवमेव पतनम् । ध्रुवमेव च मे पशुमारं मारणम् । आशाङ्कुरप्रफुल्लितहृदया॰समायाताहमत्र सद्यस्तु वराकी मन्दभागा जन्मान्तरदुष्कृतफलभागिनी निराशापिशाचेन ग्रस्तेदानीम्'। इति विभावयन्ती तपस्विनी मुहुर्मुहुर्भगवंस्त्रायस्व मां त्रायस्वेति कातरेण कम्पमानेन च स्वरेण दृढतरबद्धाञ्जलिः कण्ठबाष्पकीलितवाक् कथं कथमप्यवादीत् । तदीयकरुणोद्गारप्रवाहेणेवाश्रुजलप्रवाहेण पर्यपूर्यत गुहा । तदीयकर्णमर्मभेदि दीनप्रार्थनं पुण्यात्मनः श्रुतौ रक्षककरगृहीतस्य शिशोश्चाटुवचनमिव न्यपतन्न तु वामाया विमोहकानुनय इव । "

अथाख्यायकः क्षणमात्रं व्यरमत् । परमभक्त्या प्रतिमां विशालां निरीक्षमाणः स्मारं स्मारं पूर्वसंवृत्तं पुनर्मृदुस्वरेणाख्यातुमुपाक्रमत — " अथोन्मीलितनेत्राब्जः शनैरासनादुत्थाय जोषं विततबाहुयुगल एधमानमहौदार्यो विलक्षविचक्षणः सत्यधर्मरक्षणसक्षणोऽभिरिरक्षिषयेव नतशरीरः कन्यकाया ललाटमध्यमुपाजिघ्रदतिकारुण्यनिर्झरेण च तां क्षालितवान् । महानन्दसुधापूरप्लावितान्तरङ्गायास्तस्याः समुदञ्चितरोमाञ्चायाः शङ्काकर्दमः सपदि विद्रावितस्तस्याश्च विरतमस्तकाया निमीलितनयनायाः पुरतश्चादृष्टपूर्वप्रमोदः लुलोके । ततश्च किञ्चिदाश्चर्यरूपान्तराभिभूतेव क्षणं निश्चलाभूत् स्वान्तःप्रेरितेव कथमपि व्यजानात्सा यत्स्वहृदयेश्वरस्य किमप्यवर्णनीयं परिवर्तनं समवर्ततेति । सकातर्यं सकम्पं च यावदुन्नमयति सा शिरस्तावदतिदीनतामयं क्रन्दनं तन्मुखान्निःसरति स्म । अकाण्डे संप्राप्तरूपान्तरा पावितान्तरात्मा निमीलितलोचनयुगला स्मितविकसितानना भगवद्ध्याननिमग्नेव समुपजातहर्षेव नतशीर्षा वाजिनां कण्टकक्षणत्कारमप्यशृण्वतीव समतिष्ठत । न चिराद्विविधाभरणप्रबलचाकचक्यः सुवर्णपटाम्बरधरो रोषघूर्णितलोचनो धराधिपः करणसिंहः सानुगः कन्दरं सवेगं प्रविश्य 'क्वास्ति निर्लज्जा

सम्भ्रान्ता भयाध्वा क्षणं यावत् निश्चला तिष्ठति तावदकस्मादतिभीषणा सकडकडाशब्दं सौदामिनी समदीप्यत । यावच्चास्ते चकिता कम्पमाना सखडखडाशब्दायमानदन्तततिस्तावत् सतडतडाशब्दं गुटिकास्थूलैर्धाराबिन्दुभिर्वर्षितुमारब्ध मघवा । किंकर्तव्यतामूढात्र यावन्निराशयाश्रुपूर्णाक्षी पलायमाना सक्रन्दं ध्यायति तावद्दैवयोगात् कश्चिन्मेषपालस्य बटुराजानुधूलिधूसरितचरणयुगलः पटचीवरार्धाच्छादितशरीरोऽपर्याप्ताशनपाण्डुवदनो दीर्घदण्डधरकृशकरस्तत्सन्निधे समाययौ । अयि किमिति रोदिषीति पृष्टा माणवकेन तेन भारती तस्मै स्वमभीष्टं न्यवेदयत् । एहि तावन्मया सहेति तदीयहस्तमादाय दारकस्तां शनैः शनैर्वनमार्गेण गिरिकन्दरमनैषीत् । राजकन्या चातिश्रान्ता स्विन्नाङ्गयष्टिर्विवर्णवदना दुःखदन्दह्यमानहृदया बटुना सार्धं समहायासं कतिपयघटिकाभिर्गिरिशिखरं प्राप्य गुहां पवित्रां प्रविश्य च पुण्यात्मानं सिद्धपुरुषं गाढध्याननिमग्नमालोकयत् । अथ बद्धाञ्जलिपुटा सकम्पं ससाध्वसं निरुच्छ्वासं च तमुपाययौ मन्दं मन्दं भारती । मेषपालस्य पुत्रस्तमोमयकोणे गह्वरस्यैकस्मिन् पातितोभयजानु समुपविश्य विलक्षणालोकमिमं व्यलोकयत् । संक्षुब्धं मानसमात्मनो निग्रहीतुं बलवद्यतमाना राजकन्या चिरादनभिनन्दितपानभोजना केतकीव पाण्डुरच्छविर्व्रीडाभरमन्थरा ग्रीवां नमयन्ती स्वपादाग्रमेवावलोकयन्ती क्षणं तावत्तूष्णीं तस्थौ । ततश्च सिद्धात्मानमभ्यार्थयत 'भगवन्, स्वीक्रियतां क्षुद्रजनोऽयमि' ति । स च तदाकर्ण्य नयनयुगलमीषदुन्मील्य मन्दहासवदनो जोषमास्त । पुनस्तया प्रार्थितो विधूय शिरो निरुत्तर एव स्थितवान् । प्रसीद भगवन् । अङ्गीक्रियतां तव किङ्करीयम्, निरस्ता पुण्यपादाभ्यां चेद्विनङ्क्ष्यति सा खलु । भगवत्पादपंकजयोः समर्पयतु सा जीवनमात्मीयमिति प्रह्वं पुनःपुनरभ्यर्थ्य जीवनाख्यानमात्मनः शुद्धात्मनस्तस्य श्रुतिद्वन्द्वस्यातिथीकृतवती । तद्यथा । 'अहो भगवतः प्रथमदर्शनात्प्रभृत्येव भगवति बद्धादरा समभवम् । ततश्च भगवतो दिव्यप्रभावचमत्कारपरम्परया कुसुमशरशरजातविद्धचित्ता मनसिजावेशजनितानवरताभिलापा सलज्जं कथमपि कतिपयमासान् प्राणानधारयम् । प्रतिनक्तं स्वप्ने भगवत्पुण्यदर्शनब्रह्मानन्दं विन्दन्ती जाग्रती च भगवच्चित्रं मानसभित्तिकायामालिखन्ती कथमपि जीवनयात्रामयापयम् । नैराश्याच्च दिने दिने कृशीभूतां मां वीक्ष्य पितृचरणैः केनापि राजपुत्रेण सह मम विवाहे निश्चिते सति मर्मण्यभिहतेवोत्कीलितप्राणेव च समभवम् । पर्यन्ते गत्यन्तरमपश्यन्त्यनभीष्टोद्वाहादात्मानमभिरक्षितुं पितुर्गेहान्निभृतं पलायमाना भगवतश्चरणाब्जयोः समीपमागतवती परमम्ह्यदस्मात्परिरक्षेद्भगवानि' ति । एवं विलपन्त्या तयोपयाचितो भूपतेः कन्यया सिद्धात्मा प्रत्युवाच मृदुगिरा । 'वत्से, विरक्तः प्रपञ्चसुखोपभोगाच्च विमुक्तोऽस्मि खलु । अतोऽन्विष्यतामन्यः कोऽप्यनुरूपस्तरुण' इति । अनेन तस्य वचसा तद्वचनसुधारसपिपासुभ्यामिव कर्णाभ्यामेकतानताजडीकृताभ्यामिव नयनाभ्यां चित्रार्पितेवाभवद्भारती । किंचिद्व्रीडितेव किंचिस्त्रस्तेव किंचिन्निविण्णेव किंचित्क्षुब्धेव च सा समतिष्ठत । सत्वान पुण्यात्मनस्तस्य वाक् तमोमयकोणे निलीनस्य माणवकस्य श्रुतावमानुषीव । अथ यावद्भारती क्षणं स्तिमिता तिष्ठति तावदथाति दूरात्सघटघटं प्रतिध्वनिर्घोटकखुराघात-

ध्वनेर्बधिरीकृतक्रोशार्धान्तरालवर्तिप्राणिवर्गस्य प्रशान्तप्रदोषेऽस्मिन् । क्रमेण ध्वनि-
रत्युच्चतरः समजनि । मेषपालकस्यात्मजः शीघ्रमुत्थाय कन्दरायाः सोपानपङ्क्तिं
जवेनारोहत् । कम्पमानहृदया तपस्विनी भारती तरलदृष्टिर्व्याघ्रभयाभिभूतेव
कुरङ्गी दुःखपारावारे मज्जन्तीवानन्यगतिका केशाकलापमाकर्षन्ती निराशान्धकारे नष्टेव
समाक्रोशन्मुक्तकण्ठम्। 'हा हा हतास्मी' ति। विजनस्थलेऽस्मिन्नागमनेनातिक्रान्तविनयं
क्षुण्णस्वाभिमानमात्मानं मेने। ततश्च विवर्णवदना स्वेदबिंदुस्नातललाटा च राजपुत्री
बाष्पौघनिग्रहे प्रयतमाना करौ सम्पुटीकृत्य भूतलमाविलं चकार नयनजलधारया ।
तुरङ्गखुरध्वनिः प्रतिक्षणमेधमानो गिरिकन्दरस्याधिकाधिकं नेदीयान् दम्भोलिवर्षणीपगतां
भेजे। "भगवन्, त्रायस्व मां त्रायस्वे'ति भारती महात्मनः पादारविन्दयोर्निपत्य
विततबाहुपल्लवा छिन्नहन्तव्रतिम्लानपुष्पशिथिलितसुकुमाराङ्गयष्टिः सकरुणमभ्यार्थयत ।
तत्क्षणं माणवकः कन्दरसोपानमूर्ध्नो 'भूपतिर्भूपतिरि' त्युच्चैराक्रोशन् सन्त्राससविवर्णास्यः
सवेगमवरुह्य प्राविशद् गुहाम्। अभिरक्षणाय च गुप्तस्थानमन्विष्यन् 'एहि तत्राभ्यन्तरको-
णेऽन्तर्हितौ भविष्याव' इति कम्पमानां राजकन्यामसूचयत्। विधृते शिरसि तया वेपमान-
याऽऽपादमस्तकं बहुरन्धकारे परामृष्टांस्तमोवृतकोणे निरुच्छ्वासो विलीनो यावत्तिष्ठति
तावद्भारती करपल्लवौ प्रसभं समपीडयच्चैराटयेन। 'हा हा ध्रुवमेव मे विनाशोऽद्य।
ध्रुवमेव पतनम्। ध्रुवमेव च मे पशुमारं मारणम्। आशाङ्कुरप्रफुल्लितहृदया समायाताहमत्र
सद्यस्तु वराकी मन्दभागा जन्मान्तरदुष्कृतफलभागिनी निराशापिशाचेन ग्रस्तेदानीम्'।
इति विभावयन्ती तपस्विनी मुहुर्मुहुर्भगवंस्त्रायस्व मां त्रायस्वेति कातरेण कम्पमानेन च
स्वरेण दृढतरबद्धाञ्जलिः कण्ठबाष्पकीलितवाक् कथं कथमप्यवादीत्। तदीयकरुणोद्गार-
प्रवाहेणेवाश्रुजलप्रवाहेण पर्यपूर्यत गुहा। तदीयकर्णमर्मभेदि दीनप्रार्थनं पुण्यात्मनः
श्रुतौ रक्षककरगृहीतस्य शिशोश्चाटुवचनमिव न्यपतन्न तु वामाया विमोहकानुनय इव।"
अत्रास्यायकः क्षणमात्रं व्यरमत्। परमभक्त्या प्रतिमां विशालां निरीक्षमाणः स्मारं स्मारं
पूर्वसंवृत्तं पुनर्मृदुस्वरेणाख्यातुमुपाक्रमत — "अर्धोन्मीलितनेत्राब्जः शनैरासनादुत्थाय
जोषं विततबाहुयुगलः एधमानमहौदार्यो विलक्षविचक्षणः सत्यधर्मरक्षणपक्षगोऽभिरि-
रक्षिषयेव नतशरीरः कन्यकाया ललाटमध्यमुपाजिघ्रदतिकारुण्यनिर्झरेण च तां
क्षालितवान्। ब्रह्मानन्दसुधापूरप्लावितान्तरङ्गायास्तस्याः समुदञ्चितरोमाञ्चायाः
शङ्काकर्दमः सपदि निर्वासितस्तस्याश्च विततमस्तकाया निमीलितनयनायाः पुरतश्चादृष्ट-
पूर्वप्रमोदः हुल्लोके। ततश्च किञ्चिदाश्चर्यरूपान्तरामिभूतेव क्षणं निश्चलाभूत्
स्वान्तप्रेरितेव कथमपि व्यजानात्सा यत्स्वहृदयेश्वरस्य किमप्यवर्णनीयं परिवर्तनं
समवर्ततेति। सकातर्यं सकम्पं च यावदुन्नमयति सा शिरस्तावदतिदीनतामयं क्रन्दनं
तन्मुखान्निःसरति स्म। अकाण्डे संत्रासरूपान्तरा प्लावितान्तरात्मा निमीलितलोचनयुगला
स्मितविकस्मितानना भगवद्ध्याननिमग्नेव समुपजातदर्पेव नतशीर्षा वाजिनां कण्टकङ्कण-
त्कारमप्यशृण्वतीव समतिष्ठत। न चिराद्विविधाभरणप्रबलचारुचक्रयः सुवर्णपटाम्बरधरो
रोषघूर्णितलोचनो धराधिपः करणसिंहः सानुगः कन्दरं सवेगं प्रविश्य 'क्वास्ति निर्लज्जा

कुलकलङ्किनी 'ति सगात्रविक्षेपं चुक्रोश कोपहलाहलवशीभूतास्यः। ततः पुरः समुपसृत्य तारस्वरेण पुनः सञ्जगर्ज 'क्वास्ति दूषको दुरात्मे' ति। भारती यावच्छिद्धावन्मौनमालम्ब्य तिष्ठति तावद्भूपतौ रोषपावकातिरेकेण ज्वलन् बाहुमात्मनः स्फुरद्धातुकासिधरमुन्नमयन् क्व क्व भारतीसुहृद्यैश्चिस्तां प्रत्यधावत्सरभसम्। अथात्रि च तत्क्षणं कश्चिद् ध्वनिः सहसा। 'प्रतीक्षस्व, प्रतीक्षस्व। पश्य पश्य पुर' इति। उदीरितमात्रे वचनेऽस्मिन् कन्दर-गर्भतः क्षणिकदीप्तिर्घनान्धकारेऽत्र यावद् देदीप्यते तावत्काचिन्मणिशिलामयप्रतिमा भूपते-र्दृष्टिगोचरा भवति, पुण्यात्मा दिव्यपुरुषस्तिरोभूय तत्स्थाने विशालाऽचेतनापि परमसुखदायिनी कृत्रिमाकृतिर्ददृशे। योगसमाधिनिमग्नस्येव ध्यानपावितस्येव सत्याधि-पत्यानिर्निष्ठधमानप्रभावस्येव सिद्धात्मनः केनापि सद्यः प्रतिकृतिरियं निपुणमालि-खितास्ति। तमालोकमलौकिकमालोकमालोकं करणसिंहस्तेनादृष्टपूर्वचमत्कारेण चकितचकितो विस्फारितलोचनः सरोमोद्गमः क्षणं भूलग्न इव समतिष्ठत। तस्योज्ज्वलद्रोषाग्निज्वाला झटिति निर्वापिताभूत्तावत्कुतूहलाङ्गारशेषमन्दार्चिरेवावशिष्टाऽऽसीत्। तदाननिर्घृणरूपलेखा क्षणान्मृदुतामापेदे। प्रतिमायाः पुरः सम्पुटीकृतकरां जानुनतोपविष्टां बकुलपुष्पकोमला-ङ्ग्यष्टिं स्वात्मजां साश्चर्यं निरीक्षमाणो महीपतिः क्षणं जोषं स्थितवान्। ततः पृष्ठतः परिवृत्य स्वानुजान् सम्बोध्योदगिरद् "धन्येयं किल मे नन्दिनी परमात्मनः प्रतिमायाः पुरो ध्यायतां भक्तानामग्रिमभूता पाविता च स्वनिष्ठया। जन्मान्तरे कृतावदातकर्मा दिव्यात्मनोऽनुग्रहभाजनभूतेह जन्मनि खलु।"

अत्र प्रवयाः कथको मन्दीभूतस्वरः स्मृतिनिष्प्रभोदरे सुचिरादवस्थितपुरातन-धूलिधूसरपौर्वापर्यसंवृत्तजातसंस्कारोद्बोधपराधीन इव कथानकनिवेदनाद् व्यरमत। ताम्रवर्णप्रदीपस्यैधमानान्धकारस्य पारं निरूपयन्निव क्षणं तूष्णीं स्थितवान्। ततश्च चिरान्मृतां स्वहृदयेश्वरीं सविषादं चिन्तयन्निव मन्दं मन्दं निःशब्दं च समुत्थाय प्रतिमां प्रति समुपेत्य तत्पुरः साष्टाङ्गनमस्कृति सप्रश्रयं न्यपतत्।

* * *

अथ जागरितोऽहम्। उन्मीलितनयनोऽभितो दृष्टिं क्षिपन् विजनपर्वतसमी-पवर्तिनो गृहस्य कस्यचिच्छयनागारे शिबिरोचितखट्वामधिशयानमात्मानमपश्यम्। कश्चिस्स्थविरभिषङ् मदीयनाडीं परीक्षमाणो मदन्तिकं नतशरीरस्तस्थौ। अहं तु मास-द्वयात्मकं शयनं परित्यक्तुं सैन्यदलं च पुनः संगन्तुं नाशकम्।



॥ श्रीगणेशाय नमः ॥

# १. नजमदिलेलः

कश्मीरालङ्कारभूतां रत्नखचितमेखलामिव भुवो, मरकतोपत्यकेति रसिकैरन्वर्थं वर्णितरमणीयतां सुवर्णमयीं श्रीनगरीमध्यवसं सोदरद्वितीयोऽहमेकदा मित्रस्यावयोः कासिमनाम्नो नौकागृहम् । अथैकदा स निखिलजगत्प्रसिद्धतद्धीरकस्वामिनं कंचिद्रवदेशीयमहानुभावमधिकृत्य विलक्षणं कथानकमेकं कथयामास । श्रीनगरस्य नागिनलाक्योद्देशस्य विविक्तकोण एकस्मिन्संस्थापित आसीदयं महाविलासपूर्णो नौकालयः । अथास्यां शारदशर्वर्यां शर्वरीसार्वभौमकिरणप्रमुल्लसितायां मोगलविशेषोपस्कारोपपादितस्वादुभोजनोत्तरं काफीति पानीयविशेषं पातुं नौकाग्रं समारुह्य मञ्चिकासु सुखमुपविष्टास्त्रयो वयम् । कालाद्बहुनियात प्राक् पाठशालायामभीक्ष्णं कांश्चिद्बटून्मोहमन्त्रमोहितान्स्वेच्छानुकूलमचीकरत्कासिमः । एकदानुपस्थितमपि कञ्चिन्माणवकमात्मने पत्रमलेखयत्सः । अयं बटुः कासिमसद्वेडिनि विदितमासीत्सर्वेषामतो भृशं विस्मयं प्रापुः सर्वे । परवशीकरणस्वाभीष्टसाधन आत्मनः प्रभावस्य प्रत्ययं स्वसहचराणां चित्तेषु दृढं स्थापितवान् कासिमः । वादविवादप्रियोऽयं सिद्धान्तमप्यप्रमाणीकृत्य बहुधाऽकाण्डेऽस्मान् पर्यन्ते व्यसमापयत । तथापि कथानिवेदनक्रमे श्रोतृन्सन्देहसम्भ्रान्तानालोकयन् मोमुद्यते स्म सः । आङ्ग्लदेशे कस्यांश्चित्पाठशालायामावयोः सह कासिमेन परिचयोऽभूत् । आध्यात्मिकपारलौकिकाद्याभासमयकल्पनासु विश्वस्तमभून्मित्रमावयोः । विविधभावनामयचित्तोऽयं क्वचिदतिमुखरः क्वचित्सनिर्बन्धं मौनी स्थितवान् । विचित्रप्रकृतेर्विचक्षणस्यास्येतरकुमारेभ्यो वैशिष्ट्यं किमप्यासीत् । बाल्यात्प्रभृति महार्हरत्नमन्तरेण विमोहोऽस्य क्रमेण समेधमानोऽलौकिकोऽभूद्यौवने । यत्र यत्र च प्रर्यटत्तत्र तत्र रत्नसञ्चयमकार्षीत् सः । दिष्ट्या समृद्धकुलोद्भवस्यास्य वित्तस्य गणना नासीत् ।

अथाद्य विभावर्याः सौन्दर्यातिशयविमोहिताः परःशतपुण्डरीकपरिलसितं दलास्यसरोवरं हिमाच्छादितहिमांशुचुम्बिहिमाचलशिखराणि च निरीक्षमाणा ग्रीष्मे सुखावहानां वातानां स्पर्शसुखमनुभवन्तः पयःफेनजित्वरया ज्योत्स्नया द्विगुणितोत्साहाः प्रस्फुरच्चन्द्रकल्लोलकम्पितभ्रमद्भ्रमरझङ्कारस्वरं शृण्वन्तश्च वयं कञ्चित्समयं सुखमयापयाम । अत्रान्तरे सुवर्णमयं तमाखुपात्रं कासिमः समुद्दीप्य सगडगडाशब्दं तमाखुधूमं मुखान्मेघमालामिवोदगिरत् । क्वचित्क्वचिन्ममानुजेनापि तस्मात्तमाखुपात्राद्धूम्रपानसुखं निर्वेशि । मया तु तमाखुभोगानभिज्ञेनैव भाव्यम् । परतः पुरातनाचारामूल्यरत्नमन्त्रितकवचपिशाचविमोहनविद्यादिविषयजातमधिकृत्य संलापमकुर्म वयम् । समयेऽस्मिन् कासिमोऽत्युल्लसितचित्तः पुरोनिहिताक्षोटहस्तफलकमवलम्ब्य चञ्चच्चन्द्रचमत्कारेण द्विगुणितोन्माद इव वक्तुमारभत ।

‘ अहो ! अल्पल्पो जनोऽद्य विश्वसिति खलु विमोहनविद्यायाम् । परमतिविलक्षणोऽनुभवो मया प्राप्तः किलैकदा ’ इति जगाद कासिमः प्रोच्चैरसकृत् प्रहसन् । तदीयो विलक्षणहासः कुतूहलमावयोः सपदि समुपादयत् ।

'न विद्यते जगति विमोहनविद्या कापि । क्वचिद् भावनायाः क्वचित्संत्रासादपि संभ्रान्तान् मूढमतीन् विमोहनविद्याकोविदमात्मानं मन्यमानश्छाद्मिको विमोहयति' इति प्रत्यवादीन्ममानुजः सनिर्बन्धं वादविवादप्रोत्साहित इव ।

'तथापि कञ्चिदूर्जस्विनं सुघटितशरीरं पुरुषं मदिच्छावशीभूतमिवालोकितवानह-मेकदा' इत्युक्त्वा सहसा व्यरमत्कासिमः ।

'अपि त्वया वस्तुतः साक्षीकृतश्चित्तविकारोऽस्य' इत्यविश्वाससंसिस्वरेणापृच्छम् ।

कासिमस्तु प्रत्युत्तरमदत्त्वा समाधिस्थित इव क्षणं तूष्णीमास्त । तदीयतमाखुपात्रा-न्तर्गतमुदकमेवानवरतं सगडगडाशब्दमकार्षीत् । कासिमो विदूरस्थहिमावृतदरिपर्वतोपरि बद्धदृष्टिर्धूमपटलाच्छादिताननः सविचारः स्थितवान् ।

'अपि त्वया विमोहनविद्यामोहितो जनोऽयं प्रत्यक्षीकृतः' इति पुनरनुयुक्तो मया कासिमोऽवदत् ।

'अथ किम् । वस्तुतः साक्षीकृतो मया पुरुषस्यैकस्य विमोहविकारः' इति किञ्चित्स्खलितवाचा स्वप्नादुद्बोधित इव न्यगदत्कासिमः । ततश्च कञ्चुककोशे हस्तवस्त्र-मादातुं हस्तं न्यवेशयत् सः । विलक्षणकथाख्यानस्य प्रस्तावनासूचकमस्य चेष्टितमिदमि-त्यजानीव खलु ।

'मदीयकथामाकर्ण्य किं वक्ष्यते युवाभ्यामिति पूर्वमेव वेद्मि' इति सगूढार्थमब्रवी-त्कासिमः ।

'किमुद्दिश्यास्ति ते निवेदनम्' इति पृष्टवानहम् । कासिमस्तु सचिन्तं तमाखुपात्रं सवेगमाध्मातुमुपाक्रमत ।

'निवेद्यतां कथा नोचेत्तव सिद्धान्ते न मनागपि विश्वसिष्यावः' इति ममानुजे-नाभियुक्त इव कासिमः पुनः सशङ्कमिवाब्रवीत् ।

'कथावसाने किं वक्ष्यथो युवामिति विदितमेव मे । परमनुभवस्त्वयमपूर्वः खलुः । अन्यः कोऽपि जनो व्यवहारज्ञोऽपि धीरोऽपि तादृशानुभवेन मुहूर्तमात्रमपि सन्त्रासितोऽ-भविष्यत्' इत्युदीय रजनीकरकरनिकरेण देदीप्यमानानि हीरकखण्डानीव दलाव्यसरसो जलानि निपुणं निरीक्षमाणः कथां कथयितुमारब्धवान् ।

'अतिरमणीयरजन्यामस्यां नन्दनवनसदृशे स्थलेऽस्मिन् विचित्रकथाख्यानं नानुरूपं किल । सुराङ्गनानामितिहासाख्यानं शोभेत यावत् । कथानकमिदं कुमारक्रीडामण्डलस्य श्रवणानुरूपं खलु । तथापि युवयोः कुतूहलपूर्त्यै कथयिष्य एव ।

'श्रुतो भवद्भ्यां मजमद्दिलेखनाम्नो प्रथितकीर्तेर्नर्तनशयमित्यन्वर्थनाम्नोऽद्भुतहीर-कस्य सौन्दर्यातिशयः । अथ यम्भरद्वाकाभ्राङ् सिरियाबाबिलोनफारसीस्थानचीनादिदेशेषु कृतपर्यटनेन मोहमयीमागादिनवता मया हीरकमुकुटमिदमालोकि ।'

अत्राख्यानकोऽकाण्डे विरम्य लघुपत्रकस्थं ताम्बूलखण्डनिकरं हस्तपल्लवेनामार्क्षीत्। ततश्च विदूरोद्देशबद्धदृष्टिर्गाढचिन्तनमग्नमना इव क्षणं तूष्णीमस्थात्। 'अथैष विचिन्तयति कच्चिदभिजातं चीनदेशीयं मन्दारिन इति तद्देशीयस्यैवोपदिशसि' त्याकलितं मया। प्राहुर्जना हि चीनदेशीयस्य तस्य महानुभावस्य महार्हमरकतविद्रुमाणि हरित-वर्णानि रत्नानि कासिमेन तस्माद्विनोदनविधिना मोहितादात्मसात्कृतान्यासन्निति। अतः कुतूहलपरवशो रत्नविषयस्यैवाभिज्ञातस्य वार्तां श्रोतुकामः सातुर औत्सुक्यमागल-स्थितोऽहम्। क्षणोत्तरं कासिमोऽपि निवेदयितुमुपाक्रमत।

"अथ द्विवर्षेभ्योत्तरं मोहमयीं प्रत्यागतेन मया पितृव्यमुखात् सकलभुवन-विख्यातस्य नजमदिहेलनाम्नो हीरकस्य वृत्तं समाकर्णि। मणिहीरकस्य वर्णनं श्रावं श्रावं मज्जातकुतूहलोऽहं तत्सम्प्रति हस्तगतं कृतवतोऽरबदेशीयस्य शेखमहानुभावस्य निवासं मां प्रापयेति पितृव्यमभ्यार्थये। परं बगदादनगरं तस्यां रात्रौ प्रस्थास्यमानोऽसौ मुम्बापुरस्थो ममाभ्यर्थनां सफलीकर्तुं नापारयत्। तथापि तेन शेखमहोदयस्य वासस्थाने निर्दिष्टे स्वयमेव तत्सन्दर्शनाय तस्मिन्नेव दिने गतवानहम्। अरबदेशीयोऽयमब्दुलरहमानाभिधेयः पयोधेस्तटे मोहमय्युपकण्ठे वर्लीनामोद्देशे विविक्तं किञ्चिद्विशालमपि सुन्दरं मन्दिर-मध्युवास। तस्मिन्नवसरे नागपञ्चमीमहोत्सवनिमित्तेन शेखमहोदयस्यालयस्य पृष्ठभागे समुद्रोपकण्ठस्थे महाजनसमूहः क्षीरसंभृतपात्रहस्तो नागान्तर्पणविषये समम्मिलत्। स्त्रीपुरुषबालानां प्रमुदितानां कलकलध्वनिना प्रत्यध्वनद्विशालं निकेतमयं जलधेस्तटम्। पटहगोमुखादीनां निनादः कर्णयोरनवरतमश्रावि। अन्तरान्तरा महीसुरास्ते मन्त्रपठन-मकुर्वत। अथ प्रासादस्य प्रवेशमहाद्वारं प्रविष्टो गृहस्वामिनं निजाऽविर्भूतोद्देशेन सेवकेनानुगम्यमानं नानासुगन्धकुसुमसमुल्लसितपुष्पवाटिकायां गतागतं कुर्वन्तमद्राक्षम्। अभूतपूर्वदृढगात्र उन्नतांसो दीर्घबाहुः सान्द्रश्मश्रुर्दाक्षिण्यदर्शितविशालललाटोऽत्यन्तविम-न्यतो महानुभावोऽयम्।"

अथ कासिमस्तमाखुपात्रं निर्वापितं पुनरुद्दीपयितुं क्षणं व्यरमत्। ततश्च धूमपटलं मुखादुद्गिरन्नयनयुगलं च मुहूर्तं निमील्य भूयो वक्तुमुपाक्रमत।

"शेखअब्दुलरहमानः स्वदेशाचारानुरूपेण परमातिथ्येन चिरपरिचितमिव मां भूरि संभाव्य मद्दर्शनेन प्रमुदितान्तरङ्गमिवात्मानं प्रादर्शयत्। मत्पितृव्यस्य मुखेन ममाद्यपूर्वाभ्यर्थनासम्बन्धि वृत्तं विदितमासीत्तस्येति स्फुटमभूत्। कुशलप्रश्नादिप्रस्तावना-पुण्यसुधालापमविरम्य पुष्पकुञ्जं प्रति मां महाभागोऽयमनयत्। तदीयसेवकः कोकन-दच्छविरुच्चोष्णीषधारी शोणश्मश्रुर्निजस्वामिनो निकटेऽन्वगात्।

"अथ गृहस्वामिना सह चलतो मे पादः समुज्ज्वलमेकं दुग्धपूरितं पित्तलपात्रं मार्गवृक्षपङ्क्तिस्थस्य प्राचीनस्य समीपे निहितमस्प्राक्षीत्। किमेतदिति समाधानकाङ्क्षि-कान्निदेशमनुयुक्ते मया प्रत्युवाच गृहपतिः। 'नागपञ्चमीमहोत्सवनिमित्तेनोपहारीकृतमे-तदस्मदीयसमाचारेण। महत्त्वदिनेऽस्मिन्विपत्तिवारणाय प्रायेण हिन्दुजनो नागान्

गृहरत्नसन्मन्यानः क्षीरोपहारेण प्रसादयतो' ति शान्तवृत्तिना शेखमहोदयेन गम्भीरस्वरेण निवेदितम् । पुरातनाचारे बद्धादरोऽप्यहं किञ्चित्सम्भ्रान्त इवास्मि । अथासनमधिष्ठिते मयि मन्दं मन्दमान्दोल्यमानासु व्रततिषु संवादमावयोः शुश्रूषुरिव मौनमारूलयत्सु पतगकुलेषु जातिपुष्पविकासहर्षप्रकाशमुखरेषु द्विरेफेषु दक्षिणकरपल्लवेन श्मश्रु परामृशन् साम्रेडं सोत्साहञ्च 'अपि भवद्भिर्महार्हमणीनां सम्प्रति नूतनगवेषणमकारी' ति मृदुवचसोर्दुभाषया गृहपतिर्मामपृच्छत् । इत्यनुयुक्तो मञ्जूषागतं हरिन्मणिजातं तस्मै सगौरवं प्राददर्शयम् । स च रत्ननिकरमिमं सूक्ष्मं निरीक्ष्य तद्गुणाभिज्ञो मां नितरामभ्यनन्दत् । न चिरादातिथ्यनियमाचारमनुसरन् शिराजदेशोत्पादितं स्वादु शर्बतं नाम पेयविशेषं समानीय प्रादादावाभ्यां सेवकः कुञ्जस्यैकस्मिन्कोणे च मां ससंशयं निरीक्षमाणो जोषं स्थितवान् । 'अपि श्रीमद्भिरालोकि विडम्बितनक्षत्रपतिप्रभोऽन्वर्थनामा मदीयहीरकमणिर्नजमहिलेत्याभिधेयः' इत्यनुयुक्तवान्मां गृहस्वामी मयि च कम्पितशिरसि सेवकमासमनस्तमानेतुमिङ्गितेनैव निरदिशत् । कतिपयक्षणोत्तरं कौशेयमञ्जूषाकरः सेवकः पुष्पकुञ्जं परावृत्य स्वामिनः पुरस्तात्तां निधाय क्षणं तत्रैव विलम्ब्यानिच्छयेव ततोऽपासरत् । पेटिकामेनामुद्घाट्य शेखमहोदयेन शतत्रयमापतोलस्य देदीप्यमानस्य हीरकमणेर्दर्शनेन ममाक्षियुगलं साफल्यं नीतम् । स्वप्रभाधर्षितसकलजगन्मणिजातः स्वदीप्त्याऽऽकर्षन्निव निखिलानि मनांसि सपद्येव मां हीरकखण्डोऽयं व्यमोहयत् । अवलोकितमात्रमेवमद्वितीयामूल्योपलं स्वकीयं कर्तुमुत्कण्ठाधीनोऽभवम् । 'एतं क्रेतुमिच्छामि श्रीमतः' इति सादरमाभाषितो मया 'महीपतेर्धनप्राप्त्या अपि नैतं विक्रेष्ये' इति प्रोच्य स तस्यामूल्योपलस्य वृत्तं मे न्यवेदयद्यथा । 'रत्नस्यास्योदारगाथापरम्परया विमोहिता मोगलधराधिपा अकबरजहांगिरादय इत्यैतिहासिकाः प्राहुः किल । मोगलसार्वभौमस्य राज्ञः प्रणयनिर्विशेषप्रियायाः सुराज्ञ्याजित्वराया नूरजहानाख्यायाः प्रथितलावण्यकीर्तेः केशकलापं भूषयामासायमि'ति । अथ रत्नमिदं निपुणं निरूपयन्पुरातनमोगलसाम्राज्येतिहासः साकल्येन तस्य देदीप्यमानरश्मिषु प्रतिबिम्बित इवेत्याकलयम् । क्षणं च विमोहार्णवे निमग्न इव स्थितोऽहम् । शेखमहोदयस्य तु सेवको मां सशङ्कं सरोषं च निरीक्षमाण आस्त ।

" अथ नजमद्दिलेलहीरकोपलमणेरनवरतचिन्तनैकतानमानसोऽहं केनापि सन्धानेन तमात्मसात्कर्तुं निरचिनवम्। चिरं तत्स्वामिनं गाढं व्यचिन्तयम्। न जाने किमकरोन्महानुभावोऽयं तदा परं कथमपि गतदिन इवाद्यापि तत्सान्निध्यं व्यभावयम्। रात्रौ च स्वप्ने निजहीरकं मे ससौहार्दमुपनयन्तं तमपश्यम्। यावदुत्थाय तममूल्यं मणिमादातुं प्रसारयामि करद्वयं तावत्तिरोहितोऽभूदरबदेशीयमहाभागोऽयम्। प्रबुद्धश्चाहं भग्नमनोरथोऽपि रत्नमिदं कथमपि दैवयोगान्मद्धस्तगतं भवितेत्यकल्पयम्।"

अथास्मत्सुहृन्मुहूर्तमत्र विरम्याकाण्डेऽवरुह्य च नौकागृहस्याधस्तलं सपदि कौशेयमञ्जूषाकरो न्यवर्तत। अथ तावत्पेटिकामुद्घाट्य बृहदाकारमत्युज्ज्वलं हीरकं नौ प्रादर्शयत्। 'किमेतत्? किमेतत्? नजमद्दिलेलहीरकमणिः किम्' इति ससम्भ्रमं साश्चर्यं चाहमपृच्छम्। 'तस्य प्रतिकृतिरेवेयम्। इयं साधु साधिताऽनुकृतिस्तस्य हीरकस्ये' ति प्रोच्य निश्चिन्तं च प्रहस्य कासिमस्तद्वृत्तं निवेदयितुमुपाक्रमत यथा—

" निखिलनिशायां च तस्यामुद्विग्ननेत्रेण यापितायां मया शेखमहोदयस्याकाण्डे संवृत्तं निधनमतिशोचनीयं वदीयहीरकस्य च गूढतिरोधानं वृत्तपत्रद्वाराऽबोधि प्रातस्तराम्।"

'कथं कथम्' इति ममानुजः कासिमस्य शुष्कस्वरेण विस्मितो समुदैरयत्। 'अथ कथं त्वया प्रतिकृतिरियमधिगता' इत्यहमपि सहसाऽपृच्छम्। कासिमेऽथ सविलक्षणहस्तविक्षेपं तूष्णीं स्थिते ममानुजोऽहं च साशङ्कौ सम्भ्रमेण घूर्णितचेतसाविव परस्परमवालोकावहि। क्षणोत्तरं कासिमः पुनरुपन्यस्तुमारब्धवान्।

" अथ मध्याह्ने शेखमहोदयस्य मृत्युविचारणासमितिस्तत्प्रासादे मेलिष्यतीति विज्ञापितोऽहमधिकारिभिः। तद्गूढनिधनात्प्राक्क्षणेऽहमस्यान्तिकवर्त्यासमित्यधिकारिणो मदीयसाक्ष्यममार्गन्। अतः समाप्तप्रातर्विधिः सत्वरं शेखमहोदयानामालयं समासाद्य मृत्युमीमांसकानां समितिं मुख्यकोष्ठे संमिलितामद्राक्षम्। दिवंगतस्य स्वामिनः संमिलिते परिवारे वृद्धोऽविस्मरणीयः सेवको मद्दृष्टिगोचरोऽभूत्। प्रविशति मयि मुखशालां न्यक्षिपदयं सकोपं कटाक्षम्। अथ विचारणारम्भात्पूर्वं निजपार्श्वस्थे विष्टर इङ्गितेन सभाध्यक्षेण सूचितोऽहं जोषमुपाविशम्। अथ चञ्चललोचनः सेवकः साक्ष्यप्रदानायाज्ञापितः साशङ्कं मामनवरतं निरीक्षमाणो ह्यस्तनं वृत्तं कथयितुं सगद्गदमारब्धवान्।

" अहो दीनरक्षकाः। परेद्युरासन्ध्योपासनं पूज्यपादानां मदीयस्वामिनाममूल्यप्राणवता शरीरेणालङ्कृतमासीदवनितलम्।' अत्र क्षणं विरतवचनोऽङ्गुल्या सौदर्यं मामुद्दिश्य पुनरालपितुमुपाक्रमत। " महाशया इमे समीपवर्तिनो मस्जिदस्य पुरोहितस्योपासकान् प्रति संध्योपासनार्थमाह्वानात्प्रागेव स्वामिनः सन्दर्शनाय समायाता मन्दिरमिदं किल। कृतसत्काराः स्वामिभिरमी कुसुमकुञ्जं समानीताः। अहं च नित्यनियमानुसारेण स्वामिनो निकटेऽनुगम्य तयोः पार्श्वे स्थितवान्। न चिरात्तममूल्यहीरकमणिं समानेतुमादिष्टः स्वामिभिः क्षणमात्रमेव तौ व्यसृजम्।'

" अत्र निरुद्धकण्ठः कञ्चुकनालिकप्रान्तेन नेत्रयुग्मं प्रमृज्योष्णं च निःश्वस्य विस्फारितनेत्राभ्यां मामवेक्ष्य समभाषत।

"'न चिरात्सन्ध्योपासनार्थं प्रार्थनाकौशेयास्तरणं भूतले विरचय्य वाटिकायाः पार्श्व-भागे नेदिष्ठे संध्यामुपासितुमपासरम् । समापितसंध्योपासनक्रियो यावत् पुष्पकुञ्जं निवर्तेऽहं हन्त तावत्प्रार्थनास्तरणे गतासुम्स्वामिनो विलोकयामि । समुद्घाटितपिधाना हीरकमञ्जूषा रिक्ता तत्पार्श्वे स्थिताऽसीदि'ति ।

"इति निवेद्याधिकाधिकमन्दीभूतस्वरो द्विगुणितद्वेषो सभ्रूभङ्गं मां निरूप्य विरत-वचनो वातायनात्पुष्पकुञ्जस्य दिशं प्रत्यालोक्य दीर्घं च निःश्वस्य पुनः समुपाविशत् । अत्रान्तरे वाटिकायां विरचिता विष्टराः शोकानुकम्पादर्शनाय समायातानां मित्रज्ञाति-बान्धवादीनां कृते तैः क्रमेण समपूर्यन्त । मुखशालायाः समीपवर्तिनि प्रकोष्ठे पुरोहितानामुत्तरक्रियामन्त्रान् पठतां शोकस्वरोऽनवरतं समाकर्णि । ततो मुहूर्तं यावत् परितो जनैः संशयोद्गारैः पर्यपूर्यत सभामण्डलं तावन्मां संबोध्य सभाध्यक्षः समभाषत ।

"'शेरमहोदयानामाकस्मिकमृत्युकारणं नाद्य यावद्विदितमस्माकम् । अन्तिमदर्शनं तेषां भवद्भिरुपलब्धमिति भवत्साक्ष्यनिवेदने कुतूहलमस्माकम् । तद्धैर्यमवलम्ब्य कथ्यतां सर्वमेव । भवतामत्रागमनहेतुः । अपि चिरपरिचयाद्वा हीरकदर्शनकुतूहलाद्वा कुत आयाताः । किमुक्तं शेरमहोदयैः । कियन्तं कालमवस्थिता यूयं सदनेऽस्मिन् इत्यादि विशकलय्य निवेद्यताम् ।'

"इत्याज्ञापितः सभाध्यक्षेण परिस्थित्याकुलोऽहं किंचिद्दोलायमानमानसः कतिपय-क्षणान्युपशमय्य शेरमहोदयानां प्रथमदर्शनादारभ्यावयोः संलापो हीरकप्रदर्शन-मभिनन्दनं निर्गम इत्यादिं वृत्तान्तं सविस्तरं न्यवेदयम् । विरतवचसि मयि मुखशाला भयानकनिःशब्दतया मुहूर्तमापूर्णाऽभूत । क्षणेऽस्मिन् संत्रासससन्देहमिश्रितचिन्ताभिभूतचेता मनस्यकरवम् । 'प्रायेण शेरमहोदयानां घातुकं मां शङ्कते जनः । मां दण्डपाशवधस्तम्भं प्रेरयिष्यन्त्यधिकारिणः । निरपराधिनमात्मानं कथं नाम समर्थयेय । अव्यापारेषु व्यापार एव व्यधायि मया हीरकदिदृक्षुणा । हीरकलिप्सा मे निखिलदेशस्य सङ्ग्राहकाणां विदितैव । शेरमहानुभावानां सजीवानामन्तिमदर्शनं मे स्यादिति सभाजनस्य संशयस्पष्टाक्षर एव मुच्यत इदानीम् ।' इत्थं नानाविधचिन्तासन्तानाक्रान्तो विवर्णवदनः शुष्ककण्ठो वेपमान-हृदयो यावदवतिष्ठे तावत्सहसैव द्वारमुद्घाट्य मरणोत्तरदेहपरीक्षाफलमादाय भिषजौ द्वौ मुखशालां प्राविशताम् । सभाध्यक्षस्य पृच्छया प्रेरितोऽब्रवीदेतयोर्धुर्यः । 'पाद-मलप्रक्षालनस्य चिह्नं गलस्योपरि वा रक्षणं न संलक्ष्यत आवाभ्याम् । अतो मृत्योः कारणं न किमप्यावाभ्यां विदितुं शक्यत' इति ।

"'हा ! धिक् ! धिक् ! इन्द्रजालस्य कोऽपि दारुणः प्रसरोऽयम्' इति व्यथितोऽधिकं निर्वेदितोयः स शेरमहोदयस्य सेवको मां कौतुकाविष्टं निरीक्षमाणः प्रोच्चैः समुदैरयत् । तदीयं वचो भुजङ्गफूत्कार इवाप्यनल्प प्रकोष्ठे मदीयः । सभामण्डले च तावत्कलकलविच्छिन्ना निःशब्दता व्यराजत । अहं तु निष्करुणचिन्ताभारभङ्गुरात्मा कम्पमानहृदयो भूतले सन्नधीः निपतवान् ।"

इत्युक्त्वा विरतनिर्वेदनो गतवृत्तचिन्तनपरो विलक्षणस्मितास्यः क्षणं तूष्णीकामास्त कासिमः। अर्धसमाप्तां तस्य कथामाकर्ण्यावां चमत्कारितौ सम्भ्रान्तौ च साकूतं परस्परं व्यलोकयाव। प्रश्नपरम्पराऽऽवयोर्जिह्वाग्र उत्तस्थौ। ततः कासिमेन पुनरुपन्यस्तुमारब्धे निरुद्धनिश्वासा अशृणुव।

"अथाचिरात्सभाध्यक्षो मामप्राक्षीत्। 'अपि चिरान्महार्घरत्नसंग्रहे व्यापृता भवन्तः' इति।

"'श्रेष्ठमणिसञ्चयनमेव मे जीवनस्य प्रधानव्यवसाय आयौवनारम्भात्। तदर्थं च देशादेशं पर्यटनं मम। पितृधनस्य भूयिष्ठांशस्य व्ययश्च। शेखावदुल्लमहानुभावकृतेन हीरकस्य भृशं मयाभिलषितस्य क्रयप्रत्याख्यानेन नितरां भग्नमनोरथो निराशाकुलमभवं ह्यः'।

"इति प्रत्युक्ते मया पुनर्गाढनिःशब्दताजनितनिष्प्रभत्वाद्विरूसाहितमभूदधिकाधिकं सभामण्डलम्। सभाध्यक्षो भिषग्भ्यामुमाभ्यां कर्णसंलापमकरोत्। अहं च यावन्निःशब्दतया क्लिश्यमानो जोषमवस्थितस्तावद्भिषजोरेकमपृच्छत्सभाध्यक्षः।

'अपि केनापि विमोहविद्याप्रयोगेण प्राणानपहर्तुं पार्यत' इति।

"प्रश्नेनानेन समापतेः संत्रासाभिभूतः क्षणं निरुद्धश्वासो नतशिरा निश्चलश्च स्थितवानहम्। पुरातनचीनमन्दारिणस्य मरकतमणीनां च विषयो मत्स्मृतिसरणीं सरभसमगाहत।" अत्र पुनर्विरतवचाः कासिमः।

'विमोहविद्याभियोगाच्चीनदेशीयमहाजनस्य मरकतमणिप्राप्तये प्राणा अपहृतास्त्वयेति किंवदन्तीं विचिन्तयसि किम्' इति पृष्टप्रायो मयेङ्गितमात्रेण पुनः सम्भाषितुमुपाक्रमत मित्रमावयोः।

"अनुप्राप्यानाः केचन जना विगतासवो जाता इति श्रुतमस्ति मयेति भिषजा प्रत्युक्ते पुनरुभाभ्यामगदंकाराभ्यां कर्णालापमकरोदध्यक्षः। चिन्तापरश्चाहं महानर्थगर्तनिपतनोन्मुखमात्मानमवाबोधम्।"

'कुतः? कथम्?' इति सविक्षेपहस्तेनानुजेन मे समुदीरितम्।

"यतो नजमदिलेलहीरकं श्रेनुमेल्ड शेखमहोदयैश्च मदभ्यर्थना प्रत्याख्यातेति प्रतिपद्य दोषपात्रतां नीतवानहमात्मानम्। चीनमन्दारिणस्य च भूतवृत्तं प्रायो विदितमासीद्विषेपाम्। क्षणेऽस्मिन् पैशाच्या छायया ऽऽवृतमात्मानमकल्पयम्। हीरकस्य रश्मिजातमालाम्बरेणान्धीकृत इव भ्रान्तमस्तकोऽभवम्। कल्पायमानायां निःशब्दताकालकलायां भिषग्भ्यां सभापतौ संमन्त्रयमाणे भयसन्देहाक्रान्तो निरुद्धनिश्वासः स्थितवानहम्। तेषां मन्त्रणस्याहमेव विषय इत्यत्र सन्देहलेशोऽपि नासीत्। अथ यावन्मन्दिरस्यान्ततः पुरोहितानां मन्त्ररत्नमलिरदलस्य झणत्कारनाद इवाश्रावि। तदेतत् क्वचिद् व्यरमत्क्षणं ततश्च पुनरधिकाधिकोच्चैः समाकर्णि। पर्यन्ते च मन्दरुदितमिवाश्रूयत। किञ्चित्कालोत्तरं सहसा सदनस्य बहिर्भागे कस्यचिद् गुरुपादनिक्षेपः श्रुतिगो-

चरोऽभूत् । ततो विशालं प्रवेशद्वारमुल्लङ्घ्य कश्चित्सुघटितशरीरो ह्रस्वाकृतिर्निर्विकाराननः पुरुषो सुखशालां सहसा प्राविशत् । सोऽयं शेखमहोदयानां मालाकारः सभापतिं शनैः शनैरुपेत्य 'पुष्पवाटिकायामुपलब्धमिदं मये'ति सभागतानां न कमप्येकं विशिष्टमुद्दिश्य सस्मितैः पुरः पङ्कलिप्तं वस्तु किञ्चिन्न्यधात् ।"

'किमासीद्वस्तु तद्' इत्यधीरमपृच्छम् ।

"अभूत्किलैतद्व्रजमदिलेखहीरक एव । मालाकारेणासौ पुष्पकुञ्जान्नातिदूरनिहित-दुग्धपात्रस्य समीपमुपलब्धः । 'ततश्चेदमपि मयाधिगतं तत्रैवे' त्यभिधाय फणिनो निर्मोकस्तेन प्रादर्शि । व्याहरच्च 'जानन्ति किल श्रीमन्तो यत्परेद्युर्नागपञ्चमीमहोत्सवोऽभूद्दिने । तन्निमित्तमुपवनेऽत्र सर्वतो दुग्धपात्राणि निहितान्यासन् । भुजङ्गहतकश्च कोऽपि पीतदुग्धो घोरचेष्टितोत्तरमात्मनो निर्मोकेन रिक्तभाजनं सनाथीकृतवान्' इति ।

"तद्वचनमाकर्ण्य क्षणं सर्वे सभाजनाश्चित्रलिखिता इव नीरवाः संवृत्ताः । अहं च स्तब्धीभूतश्चक्षुषी स्थिरीकृत्य जोषं स्थितवान् । परितस्तावत्सभामण्डलस्य विस्मयोद्गार-प्रवाहैः पर्यपूर्यत सुखशाला । सभापतिश्च कुतुकपरवशान् सभास्तारान् संबोध्य समभाषत । 'अहो ! सर्वमिदानीं शेखाब्दुलमहोदयानां निधनकारणं स्फुटमेवास्ति । न किञ्चिदप्यव-शिष्यते निर्णयविषयस्य । कासिममहाशया अपि संशयारोपान्मुक्ता इत्यभिनन्दनीयाः खलु' इति । कृतान्तमुखकुहरादिव निर्गतमात्मानं मन्यमानः क्षणं विस्मृतात्मेव स्थितवानहम् ।"

अथ निरनवाक् कासिमो निमीलिताक्षः क्षणं तूष्णीमस्थात् । शेखाब्दुलमहोदया-नामस्मिन्मृत्योर्गूढताजालिकायामुद्ग्रथितायां कासिमं निपुणं निरूपयन् 'पन्नगस्यास्य गरलेनात्युग्रेण भाव्यमि'ति न्यगदम् ।

कासिमः—अथ किम् । प्रोचुर्जना हि सदा यन्निर्मोक एष कस्यचित् करालनाग-विशेषस्यास्तीति । शेखमहोदयाः संध्योपासनमनुतिष्ठन्तो दष्टा निमिषमात्रेण च प्रायो गतासवः स्युः ।

मन्दोदरः—कथं नाम भिषग्भ्यां ताभ्यां गरलविकारो न समलक्ष्यत ?

कासिमः—आः ! विचित्रमेतत्खलु । परमतिविरलदृष्टोऽयं प्रसङ्गो यद् गरलेन निरपराधे जने दारुणमार्थं दोषभारः समारोपितः ।

अहम्—*किमभवद्व्रजमदिलेखहीरकस्य ?*

कासिमः—शेखमहोदयेभ्यो हीरकस्यास्य मूल्यं यत्प्रदित्सुरासं तस्यार्धेनैव दित्वा तं क्रेतुमपारयम् ।

मन्दोदरः—एवं भोः कासिम ते *विमोहनविद्यासिद्धान्तकथा ?* गतं सिद्धान्तः *प्रमाणीकृतस्थपदं ।*

कासिमः—यदयमो पुरामेवमिति प्रागेव स्पर्शि मया ।

इति सन्तोषतीतिविरसोत्तमं प्रपञ्चयन् कासिमेन मोहनविद्यासिद्धान्तप्रामाण्यभारः ।



॥ श्रीगणेशाय नमः ॥

# १. विधवोद्वाहसङ्कटम्

आसीदस्मिन् शुक्तिकापुरे पार्वती नाम स्वेश्वरनिकेतने दास्यकर्म कुर्वाणा काचिद्गत-भर्तृका । बाल्योद्वाहनिरोधकस्मारकाविधानात् प्रागष्टवर्षामिमां सुवर्णसवर्णाङ्गीं कमललोचनां मृदुलवचनां केनचिद् बालवरेण परिणाय्य तद्दिनेऽसौ दिवं गतः । अचिराद्विवाहोत्तरं स बालपतिरपि तदन्वगात् । ततः प्रभृति बालविधवेयं भर्तृबन्धुजनालये किङ्करीव दीनमाना नष्टोत्साहा कथमपि जीवनयात्रामयापयत् । अथ प्रौढवयः प्राप्तायां तस्यां यौवनं विपदावहं सुदत्याः कुन्तलपाशश्च नारकारीति मन्वानैस्तत्कर्तृबन्धुजनैर्मुण्डितशीर्षाऽपि नैसर्गिकलावण्याच्च व्यरुच्यत सा । श्वेतवासा हि सा कमनीयतमा विमला विंशतिवर्ष-देशीया मधुराकृतिर्विरेजे ।

अथासा सूर्यादनिशं कूपाज्जलमाहरन्ती वस्त्रसंचयं धावन्ती गोमहिषादीन् रक्षन्ती पाकगृहे प्रयस्यन्ती सा क्षणमपि विश्रान्तिसुखं नोपलेभे । तद्देवरस्यात्मजः पञ्चवर्षीयो निर्व्याजमधुरालापो तस्या एकमेवालम्बनं बभूव । परं शिशुना तेन क्वचित् क्रीडन्ती पत्युर्बन्धुवर्गैरीर्ष्यावशादपेक्ष्यत । रात्रौ भोजनं परिवेष्य भाजनानि च प्रक्षाल्यातिश्रान्ताऽन्तः-पुरस्य तमोमयकोणे जन्तुशताम्भावं श्वभ्रं मत्कुणमयं भीतस्पन्दमाना भूपिष्ठनशं गोष्ठसं-निधौ चरते कुलेऽदाश्रयन्विनी । निशीथे च बहिःस्थोरगेऽस्य मर्दानने कोणे व्यथित-सर्वाङ्गी जागरिता चिरमवतिष्ठमाना निशां नीतवती । सुप्ताऽपि क्वचित् स्वप्ने शुद्धान् बन्धूनालोक्य दर्शं दर्शं सहसैव प्राबुध्यत । ततो वायुमूर्च्छितं निकटवर्तिगोष्ठस्थित-गवां वालधिधूनिशब्दं च शृण्वन्त्युद्विग्नमना निशाशेषमगमयत् । अथवा महदानन्दकारकं देवरस्य शिशुं ध्यायं ध्यायं किंचिन्निद्रासुखमलब्ध सा । प्रभाते च गोजनस्य हम्बारवेण प्रबोधिता दोहनाय गोष्ठमव्रजत् ।

अथ गच्छत्सु वर्षेषु सूर्यांशुर्गिरिकन्दरमिव कश्चिद्युवा पार्वत्या हृदयमगाहत । शौक्तिकानामगोचरमान्तरसौन्दर्यं मृग्यन् कश्चित् प्रवासी पार्वतीं कूपसंनिधौ साक्षादिव पश्यन् रात्रौ च मनसा विचिन्तयन् मलिने पुरेऽस्मिन् व्यलम्बत । दीर्घिकासंनिधि-स्थितास्वनेकवनितासु विधवापि मनोहर्त्री पार्वत्येव तं चकर्ष । तस्या अपूर्वलावण्यं दर्शं दर्शं विमोहितोऽभूत्तस्योऽधिकाधिकम् । विधवानां दीनत्वं तु न स व्यजानात् । तथा हि । शुक्तिकापुरनिवासिनः कृपया अज्ञानधूलिभिरन्धा धर्मार्थौ नापश्यन् । तस्मात्पार्वत्या मनोवृत्तिरपि अनाचारवादभयात् बन्धुर्मध्यमाश्च परं संकुचितासीत् । तया सह चिराय वक्तुमना-सोऽपि प्रवासी तामुपैतुं नाशक्नोत् । अन्ते दैववशात्स्वयमेवैतस्य कालोऽनुकूलः । एकदा हि कूपाज्जलमुद्धृत्य त्वराद् गृहं निवर्तमानायाः पार्वत्याः पङ्किलायां भूमौ पदमस्खलत् सहसा च सा भूमौ न्यपतत् । जलसंभृतो घटो भ्रंशित्वा रिक्ततामगमत् । स्खलनेऽङ्घ्रिक्षत-मर्मासीत् । तदा तां बाष्पपूर्णनयनां पतितामालोक्यादूरस्थो युवा साहाय्यदानचिकीर्षया तत्सविधं सत्वरमुपेत्य सान्त्वनैस्तामुदस्थापयत् ततश्च सद्यः कूपतो जलं पुनः स्वयमुद्धृत्य तद्गृहमप्यापयत् । आजन्मतः कदापि नाश्रावि तयैतादृक् प्रियं वचः । व्यतिरेकेणानेन चमत्कृता सा

व्यचिन्तयत्। अपीदं कूटं बान्धवैः प्रयुक्तं स्यादिति। ततोऽर्धमार्गं भवत्या सह नेष्यामीति याचमानं तं मृदुवचसा निवार्य गृहं प्रति ययौ युवतिः। तस्या वचसि तज्जीवनकथा-निवेदकं किमप्यस्खलत्। नैसर्गिकबुद्ध्यैव तस्याश्चित्तमग्रहीत्स तरुणः। तमुदारचेतसं ध्यायं ध्यायं तस्या निरानन्दविरिक्ततमोमयहृत्कन्दरे भास्वद्रश्मिजालमिव किमपि सुखं प्राविशत्। मुहुर्मुहुरचिन्तयत्सा तस्याभिजातस्य दीर्घबाहोः प्रियदर्शनं, तस्यानल्पसौजन्यं च। कच्चित्सोऽपि मां ध्यायतीति विचारः क्रमेण वृद्धिं गत्वा तस्या विविक्तहृदयमवक्र-मयत्। यत्तरुणेनानेनोपलक्षिता, यत् प्रथमत एव मज्जीवनयात्रायां माधुरीव संभावितेति ध्यायं ध्यायं रोमाञ्चिताऽभूत्पार्वती। महानुभावस्यास्य वापीतो निर्गमिष्यन्त्यां तस्यां बद्धदृष्टेः स्मेराननं तत्स्मृतिपथान्नापासरत्। ततश्च सहसा बान्धवानां कोपवात्यास्मरणमात्रेण कम्पितविग्रहा चिरं विनिद्राऽतिष्ठत्।

तदारभ्य स्वस्वगेहं गतास्वन्यासु प्रमदासु कूपान्नातिदूरे विजने स्थले प्रतिदिनं तौ परस्परसमागमसुखमन्वभूताम्। पार्वत्या जीवनयात्राक्लेशजालं नृशंसतां च बन्धूनामचि-राद् विज्ञाय भृशं दुःखितोऽभूत्स तरुणः। तस्यानुकम्पासौजन्यसरलाचारादिसद्गुणा आदधुर्विश्वासं तस्याम्। तेनापि स्वपत्न्या आकस्मिकमृत्योः कथा तस्यै निवेदिता। निशम्य च तामश्रुबिन्दुभिरनुकम्पां व्यञ्जयन्ती तस्य भूयसा प्रेमभाजनमभूत्सा। अचिराच्च तयोः सौहार्दं वृद्धिमगात्। विवशा मृगीव सा भक्तिपराऽभूत्तस्मिन्। सोऽपि गरीयसाऽऽदरेण तां संभावयामास। चिरदुःखज दैन्यं पुरा तदानने स्फुटमासीत्तदिदानीं विलयं गतं प्रफु-ल्लत्वं च प्राप्तं तन्मुखाम्बुजम्। तस्या रूपान्तरं वीक्ष्यापि तामनादृत्य बान्धवास्तत्कारणं व्यचिन्तयन्। प्रेयसी मे यदा भूयः सुकेशी स्यात्तदा निरन्तरा भवेदिति प्रतीतो युवा स्थलान्तरं तया सह यियासुर्निजमनोगतं जातुचित्तस्यै न्यवेदयत्। तन्निशम्य रोमाञ्चिताङ्गी-भयादकम्पत पार्वती। अतिगाढस्नेहदर्शिनीं तस्याश्चिन्ताकुलां दृष्टिं विलोक्य मधुरोक्ति-भिस्तां सान्त्वयन्नवादीद्युवा। 'प्रिये मा स्म भैषीः। कांचिन्नागरिकजनैर्युतं पुरं गन्तव्य-मावाभ्याम्। तत्र त्वां धर्मतः परिणेष्यामि। न कदापि वियुक्तौ भविष्यावः' इति। सा च कम्पमाना भाविनीं सुखदीप्तिं प्रागल्भ्योत्पन्नमनोरथा। सर्वं शङ्कामयं तमश्च सहसा व्यलीयत। क्षणान्तरे तु बन्धूनां स्मृतिरुद्वेगे सति भयमुपाजीजनत्। सगद्गदं च साऽब्रवीत्। 'मैवं मैवं। परतन्त्राऽस्मि खलु'। इति नतमुखी तस्थौ सा। 'अलं भिया दयिते। निभृतं खलु गमिष्यावः'। इति सस्नेहमुक्तं तेन। क्षणोक्ता चोन्नमिताननामुद्ग-मदनां तां निरीक्ष्य युवा। कराग्रतो गाढानुरागं मृदुपल्लवाः प्रियाया ओष्ठं स्थितवत्या अनुमोदनं मया प्राप्तमिति मन्यमानस्तरुणः सहर्षं चुम्बनमकरोत्। तदनु संभ्रमानन्दकुन्दितनाम-पर्यङ्कीमनिमेषलोचनाभ्यां विलोकयन्त्येवासौ प्रसोरे मुहूर्तं स्थितवान्।

संपादयताम्' । इति प्रार्थितैस्तैर्विप्रैः प्रोक्तम् । 'गम्यतामितो न संपादयिष्यामो विवाहमिमम् । धर्मलोपो भविष्यति विधवायाः पुनर्विवाहादि'ति । केचिदमुमुरस्तद्युद्राहयितुं प्रतिपन्नवन्तोऽपि तयोर्वर्णभिन्नतां ज्ञात्वा तदर्थनां प्रत्याचख्युः । 'युवां ब्राह्मणावपि सुतरां भिन्नवर्णौ । युवयोः संयोगो वामधर्मः खलु स्यादि'ति । पर्यन्ते लौकिकज्ञानविवर्जितोऽयं प्रणयी विषण्णचेताः सम्भ्रान्तश्च व्यवहारात्समुपययौ । 'निजहिन्दुत्वं निगूहतोर्युवयोर्विवाहो लेखपत्रेण साध्य' इति निवेदितं तेन । तदपि स्वीकृत्य प्रियां वोढुकामः स सत्वरं तत्संनिधौ जगाम । आह च । 'प्रिये क्षणादावयोर्विवाहः संपत्स्यते । केवलं व्यवहाराधिकृतस्य पुरुषस्य पुरत आवयोर्नामलेखनं कार्यमि'ति । न कदापि तथेदृशो विवाहः श्रुतपूर्वः । तस्मात्संभ्रान्ता सविस्मयमप्राक्षीत्सा वल्लभम् । 'अप्ययमुद्वाहविधिर्विधवानां कृते कल्पितोऽस्ति' । स प्रत्युवाच । 'प्रिये सवर्णयोः संयोगस्य धर्मसिद्ध्यर्थमेव विधिवैर्विविध कल्पित' इति । कोऽर्थो ननु लेख्योऽत्रे'ति सकम्पमपृच्छत्पार्वती । 'आवयोर्हिन्दुत्वं निगुह्यमत्र किन्तु नास्ति मनागपि बाधा । न खलु अर्थं भवेत्तानेन । मा बिभीहि प्रिये' इति तां स समाश्वासयत् । किन्तु शुचिर्बहिष्कृतरजगतमिजन्वाटाकुलितमतिः पार्वती स्खलद्वाचाऽब्रवीत् । 'विवाहविधिरयं चातुर्वर्ण्यपत्रमिव भाति मे खलु । अनेन जातिबाह्या भवेयं'ति । अचिन्तयच्च सा । 'अहो वंशपरम्परया ज्ञातास्मि यद् भ्रष्टजातिर्हिन्दुर्नित्यमेव बहिष्कृतोऽवतिष्ठेत यावत् प्रायश्चित्त्या पुनः शुचिर्न भवेत् । सोढ्वा प्रयासं मानभङ्गमियन्तं कालं पुनः स्वजातिकोपपात्रं भवेयम् । तथापि सह वल्लभेन निवस्तुं पातालमप्यवरोढुं सन्नाऽस्मि' । इति चिन्तास्त्वानलजन्मावर्तेनोल्लिखितेव चिरं तोयं स्थिता सा । तरुणः प्रत्यवादीत् 'प्रियतमे ! आबाल्यात्स्वर्वैर्हिन्दिरस्कृतास्मि । मूढैस्तैरनुचितमेवाचरितं त्वयी'ति । पुनरभाषत पार्वती 'वल्लभ, जानामि यत्प्रायश्चित्तेन पूतो द्विजः स्वजात्या योज्यते । नोचेद्यावज्जीवं बहिष्कृतो भवतीति व्यवहारविचक्षणैः पूर्वैजैराबाल्यादनुशिष्टाः स्मः । अतो बहिष्कारादबिभेमि । त्वत्सहचरी भवितुं वह्निज्वालामपि प्रविशेयं परं जातिबहिष्कारात्स्वमात्मानं रक्षेयमि' ति ।

तरुणश्चिन्तावात्याभिहतां प्रेयसीं पुनः पुनः सान्त्वयामास । दीनदीना पार्वती तु वल्लभं सवाष्पं प्रेक्षमाणा शिरश्च कम्पयमाना सगद्गदमगदत् । 'प्राणेश ! प्राक्प्रभृतिसुप्ताया मम प्रतिकूलोऽस्ति विधिः । व्यवहारेऽस्मिन् संमतिं दातुं नोत्सहे किल । सुहृन्मणे ! क्षम्यतां क्षम्यतां हतभाग्योऽयं जन' इति । ततः पुनः पुनरनुनीता तरुणेन क्षणमात्रं प्रोत्साहितापि भूयः शङ्काविष्टाऽतिष्ठत् पार्वती । ततश्च तेनोपायान्तरं सूचयताऽभ्यर्थितम् । 'प्राणप्रिये ! मया सह निवस । धर्मपत्नीमिव त्वां संभावयिष्यामि । आजीवं त्वामभिरक्ष्यामी' ति । तस्यानुनयं निशम्य तस्या मनसि दोलायमाने मुहूर्तं सा चिन्ताकुला तूष्णीमस्थात् । अथ धन्योन्निन किञ्चित् समुत्तेजितः पुनरपि वक्तुं दधर्ष सः । 'अन्योन्यप्रेमसर्वस्वी न कोऽप्यावां शास्यति । अत्यन्तविजने ग्रामे निवसामि । मत्कर्मकरान् विना क्षेत्राद्दिनं कोऽपि मदृष्टिपथे याति ।' इति तेन पुनः पुनः समाश्वासिता सा दीर्घं निश्वस्य मन्दं पुनः शिरः कम्पयमाना दैवोपहतचेष्टितेव निरुत्तरा तस्थौ । क्षणोत्तरं किञ्चिदनुकामायास्तस्या

वचः कण्ठ एव व्यलीयत। पर्यन्ते वल्लभाऽऽत्मनो निगृह्य मृदुवाचा साऽब्रवीत्। 'आर्य! अहमधोगतिं भवतो नेतुं नेच्छामि। मत्कृते स्वार्थो न त्याज्यो भवद्भिरि'ति। तया स्वनिश्चय इत्थं स्फुटं व्यक्तीकृते तरुणोऽयमत्यन्तविषण्णचेता अभवत्।

ततः कुतश्चिद्भोज्यमानीतं तेन। अल्पमेवाहारं कृतवन्तौ तौ। निराशोद्विग्नः स प्रकोष्ठे इतस्ततोऽचलद्ध्रुवा। पार्वती च मौनमाश्रित्य तस्थौ चिन्ताकुला। धुलियल्लिकायां स्वाभिव्हरीभावं बन्धुदौर्जन्यमित्यादिसंबद्धविचारतरङ्गैः सङ्कुलमभूत्तस्याश्चेतः। अकथयच्चान्ते '*देवरस्य शिशुरेव ममैकमवलम्बनम्। कालेनातिक्रान्तशैशवः। स मयि बद्धादरः स्निह्येत्।* क्रमाच्च प्राप्तप्रौढवया मां प्रति वात्सल्येनाचरिष्यति'। इत्यात्मानं समाश्वास्य 'सर्वमेव तत्कृते सहिष्ये' इति दृढनिश्चयं यावत्कृतवती तावत्स्वग्रामं प्रियां नेतुं चरमं प्रयत्नं कृतवानेष महाभागः। सोऽपि प्रयत्नो निष्फलतां गतः। 'क्षम्यतां क्षम्यतामिति चाश्रुपूर्णनयना निगद्य पार्वती वल्लभस्य सङ्केतस्थानमप्यपृष्ट्वा ततोऽपासरत्। तां गच्छन्तीं दृष्ट्वा तरुणोऽवदत्। 'तिष्ठ तावत् प्रिये। असांप्रतमेकलया त्वया गन्तुं धूमयानेनैतावद्दीर्घमार्गेण। अहमागमिष्यामि त्वया सह। धुलियां प्रापय्य त्वामहं गमिष्यामि यथेष्टमि'ति। ततः स द्वे अभिज्ञानपत्रे अक्रीणात्। आकस्मिकसङ्कट उपयोगार्थं तां साग्रहं ग्राहयामास दशरूप्यकपत्रं च।

परेद्युर्दिवसेऽवसितप्रायः। परिक्रान्ता क्षुधार्ता विमनाश्च धुलियल्लिकां प्राप पार्वती। देवरस्यालयं प्रतियान्ती मार्गे सा कूपं यदा व्यतिचक्राम तदा काश्चिन्नार्यस्तत्र चिरायमाणाः पार्वतीं प्रवासमलिनाम्बरामालोक्य ग्रामजल्पैर्विनिर्भर्त्सयमाना तामुच्चैरुपाहसन्। उपेक्ष्य ताः सर्वा मन्दभागिनी नतमुखी प्रतिकूलपवनेन प्रहृतेव देवरवासं समासदत्। गृहस्य प्राङ्गणं तमसा लिप्तमालोक्य विजनमपराङ्गणं ययौ सा। गोष्ठद्वारे तयाऽपावृते तृणराश्यासु शयानो गोव्रजस्तां साभिज्ञं व्यलोकयत्। स्वैरचारी शुनकश्च योऽन्वहं गृहमायाति स्म सोऽद्य तस्याः करं प्रेम्णा लेढुमुपागमत्। तस्य शीर्षं लालयन्त्या तया सह प्रेम्णा संलापं कर्तुमिच्छन्निव शुनक उच्चैरभषत्। तयाप्ये प्रेमसंप्लुते तस्य नयने वीक्ष्यात्मानुकम्पया तस्या हृदयं व्यलीयतेव। 'भक्ष्यं ते दास्यामि तिष्ठ तावदि'ति तद्वचो निशम्य तदनुयायी भक्तिपरः शुनको जोषं स्थितवान्।

तदनु गृहस्य वेदिसोपानमारोहत्पार्वती। महानसे निविष्टया श्वश्रुदासिन्या गृहगर्भं प्रकाशितमासीत्। तत्पादशब्दमाकर्ण्य देवरस्य शिशुर्हर्षनिर्भरमुग्धाननः प्रधावितो गृहाद्बहिः। यावत्स देहलीमतिक्रमिष्यति तावत्तत्रान्तर्गृहात् स्थितेन कर्कशध्वनिनाऽरुध्यत। याञ्चाकार्यं सुवर्णशलाकाकल्पः प्रेमाग्रहात्फुल्लोत्सः पार्वतीमाह्वयन्देहल्यां स्थितवान्। अर्भकं प्रति यावत्सा करौ प्रासारयत् तावत्तस्य माता क्रोधवर्णीकृतानना पुरोऽभूत्। 'आर्ये! कुलकलङ्किनि पुनः पुनरागच्छसि कृपणे अस्मद्गृहमि'ति। तदपवादपातेन घनाहतेव पार्वती संज्ञानष्टाऽभूत्। मृत्युकालस्येव सीमायां पातनयाऽऽविष्टा क्षणं मूकेव तस्थौ। ततः शनैः पश्चात्पदमपासरत्। बालकश्च पुनः पुनरम्मामाह्वयन् तां प्रति हस्तौ प्रासारयच्च। यावत्स शिशुरम्बां प्रत्युपसर्पेति तावत्तमनुसरन्त्याकृष्टगम्या हरि सहसा प्रोहति।

